# अथ रविवारव्रतप्रयोगः

तत्र व्रतकर्ता शनिदिने हविष्याशनब्रह्मचर्यादिनियमवान् रवौ मुहूर्तावशिष्टायां रात्रावुत्थाय अरुणोदये नद्यादौ स्नात्वा संध्यातर्पणसूर्यायदानानिविधाय गृहानागत्य गोमयोपलिप्ते देशे स्वासने उपविश्य दीपं प्रज्वलय्य आचम्य सुमुखश्चेति गणेशाय पुष्पाञ्जलिं,

**नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ।**

**त्रयीमयाय त्रिगुणात्मधारिणे विरिञ्चिनारायणशंकरात्मने ।**

इति सूर्याय च पुष्पाञ्जलिं समर्प्य व्रतस्वीकारं कुर्यात्-

**ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं मम समस्तरोगनिरसनद्वारा आयुष्यादिसकलकामनासिद्धये श्रीभास्करदेवप्रीतये रविवारव्रतं करिष्ये ।**
जलपूर्ण ताम्रपान करयोः कृत्वा-

इदं व्रतं मया देव गृहीतं पुरतस्तव ।

निर्विघ्नं सिद्धिमायातु भास्करस्य प्रसादतः॥

इति देवाग्रे भूमौ जलमुत्सृजेत् ।

ततः सामान्यार्घ्यस्थापनादिविशेषार् घ्यस्थापनान्तं विधाय पूजासङ्कल्पं कुर्यात्-

**ॐ विष्णुः ३ अद्येत्यादि अमुकोऽहं मम समस्तरोगनिरसनद्वारा आयुष्यादिसकलकामनासिद्धये श्रीभास्करदेवप्रीतये रविवारव्रताङ्गत्वेन यन्त्रलिखितस्य सपरिवारस्य श्रीभास्करदेवस्य यथामिलितोपचारैः पूजनं करिष्ये ।** 'एतन्ते' **'मनोजूतिः०'** इत्याद्यन्ते **ॐ भूर्भुवःस्वः श्रीभास्करदेव साङ्ग सपरिवार इहागच्छ इह तिष्ठ** इति रक्तचन्दनेन लिखितताम्रपात्रस्थमूर्तिमण्डलं स्थापयेत् ।

## अथ रविवारव्रतप्रयोगः

ध्यानम्--

तेजोरूपं सहस्रांशुं मत्ताश्वरथवाहनम् ।

द्विभुजं वरदं पद्मलाञ्छनं सर्वकामदम् ॥

जपाकुसुमसंकाशं काश्यपेयं महाद्युतिम् ।

तमोऽरिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम् ।।

**ॐ नमो भगवते आदित्याय । आवाहनम्-**

आगच्छ भगवन्सूर्य मण्डलेऽस्मिन् स्थिरो भव ।

यावत्पूजा समाप्येत तावत्वं सन्निधौ भव ॥

**ॐनमो०। आसनम्-**

हेमासनं महादिव्यं नानारत्नविभूषितम् ।

मद्दत्तं गृह्यतां देव दिवाकर नमोऽस्तु ते ॥

**ॐ नमो०। पाद्यम्–**

**गङ्गाजलं समानीतं परमं पावनं महत् ।**

पाद्यं गृहाण देवेश धामरूप नमोऽस्तु ते ॥

**ॐ नमो० ।अर्घ्यम्-**

**भो भो सूर्य महद्भूत ब्रह्मविष्णुशिवात्मक ।**

अयं भक्त्या मया दत्तं गृहाण परमेश्वर ॥

## अथ रविवारव्रतप्रयोगः

**ॐ नमो० । आचमनीयम्-**

गङ्गादितीर्थजं तोयं जातिपुष्पैः सुवासितम् ।

ताम्रपात्रे स्थितं दिव्यं गृहाणाचमनीयकम् ॥

**ॐ नमो० । मलापकर्षस्नानम्-**

जाह्नवीजलमत्यन्तं पवित्रकरणं परम् ।

स्नानार्थं तु मयाऽऽनीतं स्नानं कुरु जगत्पते ॥

**ॐ नमो०। पञ्चामृतस्नानम्-**

पयोदधिवृतैश्चैव शर्करामधुसंयुतैः।

कृतं मया च स्नपनं भास्करः प्रीयतां मम ।।

**ॐ नमो० । शुद्धोदकस्नानम्-**

गङ्गा गोदावरी चैव यमुना च सरस्वती ।

नर्मदा सिन्धुकावेरी ताभ्यः स्नानार्थमाहृतम् ॥

तोयमेतत्सुखस्पर्श स्नानार्थं प्रतिगृह्यताम् ॥

**ॐ नमो० । मूलेन स्नानाङ्गमाचमनीयम् । वस्त्रम् -**

रक्तवस्त्रयुगं देव सूक्ष्मतन्तुविनिर्मितम् ।

शुद्धं चैव मया दत्तं गृहाण परमेश्वर ॥

**ॐ नमो० । मूलेन वस्त्राङ्गमाचमनीयम् । यज्ञोपवीतम्-**

नमः कमलहस्ताय विश्वरूपाय ते नमः ।

उपवीतं मया दत्तं तद् गृहाण दिवाकर ॥

**ॐ नमो० । मूलेन यज्ञोपवीताङ्गमाचमनीयम् । गन्धः-**

कुटुमागुरुकस्तूरीसुगन्धैश्चन्दनादिभिः ।

रक्तचन्दनसंयुक्तं गन्धं गृह प्रभाकर ॥

**ॐ नमो० । अक्षताः-**

रक्तचन्दनसंमिश्रा अक्षताश्च सुशोभनाः ।

मया दत्तास्तान् गृहाण वरदो भव भास्कर ॥

**ॐ नमो० । पुष्पाणि**

जपाकदम्बकुसुमरक्तोत्पलयुतानि च ।

गृहाण देव पुष्पाणि सर्वकामप्रदो भव ॥

**ॐ नमो। अथ गन्धाक्षतपुष्पैः पूर्वादिदलेषु सूर्यादीन् पृथङ्नामभिः पूजयेत्-**

**ॐ सूर्याय नमः । ॐ रवये० २। ॐ विवस्वते. ३। ॐ भगाय०४। ॐ वरुणाय०५। ॐ मित्रायः ६। ॐ आदित्याय०७। ॐ विष्णवे। मध्ये ॐ भास्कराय० ॥ ॐ अरुणमाठरपिङ्गलदण्डादिसर्व- परिवारदेवताभ्यो० १०॥ सर्वावरणसहिताय ॐ।नमो भगवते आदित्याय०११ ।**

**अथाङ्गपूजा**—आर्द्राक्षतान्प्रगृह्य

**ॐ मित्राय नमः पादौ पूजयामि । ॐ रवये० ज ० । ॐ सूर्याय० जानुनी । ॐ**

## अथ रविवारव्रतप्रयोगः

**खगाय० ऊरू० । ॐ पूष्णे० गुह्यं । ॐ हिरण्यगर्भाय कटिं० । ॐ मरीचये नाभिः। ॐ आदित्याय जठरं । ॐ सवित्रे हृदयं ॥ ॐ अर्काय० स्तनौ । ॐ भास्कराय० कण्ठं । ॐ अर्यम्णे० स्कन्धौः। ॐ प्रभाकरायः हस्तौ० । ॐ अहस्कराय० मुखं० । ॐ ब्रने नासिकां० । ॐ जगदेकचक्षुषे० नेत्रे । ॐ सवित्रे. कर्णौ | ॐ त्रिगुणात्मधारिणे० ललाटं। ॐ विरिञ्चिनारायणशंकरात्मने शिरः। ॐ तिमिरनाशिने सर्वाङ्गे ।**

**ॐ नमो०। धूपः-**

दशाङ्गगुग्गुलोद्भूतः कालागुरुसमन्वितः।

आलेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम् ॥

**ॐ नमो० । दीपः-**

कार्पासवर्तिसंयुक्तं गोघृतेन समान्वितम् ।

.दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम् ॥

**ॐ नमो० । नैवेद्यम्-**

पायसं घृतसंयुक्तं नानापक्वान्नसंयुतम् ।

नैवेद्यं च मया दत्तं गृहाण सुरसत्तम ।

**ॐ नमो० । मध्ये पानीयम् ।**

क्षणं ध्यात्वा जपं विधाय समर्प्य नैवेद्यमुद्वास्य

**आचमनीयम्-**

कर्पूरवासितं तोयं मन्दाकिन्याः समाहृतम् ।

आचम्यतां जगन्नाथ मया दत्तं हि भक्तितः॥

## अथ रविवारव्रतप्रयोगः

**ॐ नमो। करोद्वर्तनार्थे गन्धः-**

मलयाचलसंभूतं कपूरेण समन्वितम् ।

करोद्वर्तनकं चारु गृह्यतां जगतः पते ॥

**ॐ नमो०। फलानि-**

फलान्यमृतकल्पानि स्थापितानि पुरस्तव ।

तेन मे सफलावाप्तिर्भवेजन्मनि जन्मनि

**ॐ नमो० । ताम्बूलं-**

एलालवङ्गकर्पूरखादिरैश्च सपूगकैः।

नागवल्लीदलैयुक्तं ताम्बूलं प्रतिगृह्यताम् ॥

**ॐ नमो० । दक्षिणा-**

दक्षिणा काञ्चनी देव स्थापिता पुरतस्तव ।

गृहाण सुमुखो भूत्वा प्रभाकर नमोऽस्तु ते ॥

**ॐ नमो। नीराजनम्-**

पञ्चवर्तिसमायुक्तं सर्वमङ्गलदायकम् ।

नीराजनं गृहाणेदं सर्वसौख्यकरो भव ।।

**ॐ नमो० । विशेषार्घ्यः-**

रक्तगन्धाक्षतैर्युक्तं फलपुष्पाम्बुसंयुतम् ।

जानुभ्यामवनीं गत्वा सूर्यायार्घ्यं निवेदयेत् ॥

## अथ रविवारव्रतप्रयोगः

तत्र मन्त्रः-

**नमः सहस्रकिरण सर्वव्याधिविनाशन ।**

**गृहाणायं मया दत्तं संज्ञया सहितो रवे ॥**

**ॐ नमो० इति निर्दद्यात् । प्रदक्षिणाः-यानि कानिच०**

**ॐ नमो। नमस्कारः-**

**नमः पङ्कजहस्ताय नमः पङ्कजमालिने ।**

**नमः पङ्कजनेत्राय भास्कराय नमो नमः ॥**

**नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ।**

**त्रयीमयाय त्रिगुणात्मधारिणे विरिश्चिनारायणशङ्करात्मने ॥**

**भानो भास्कर मार्तण्ड चण्डरश्मे दिवाकर ।**

**आरोग्यमायुर्विजयं विद्यां देहि नमोऽस्तु ते ॥**

**नमः सर्वहितार्थाय जगदाधारहेतवे ।**

**साष्टाङ्गोऽयं प्रणामस्ते प्रयत्नेन मया कृतः॥**

**ॐ नमो० ।**

**अथ वायनदानम्-**

रक्तवस्त्रयुगहिरण्यसहितं तण्डुलपूरितपात्रं 'हिरण्यगर्भ०' इति संप्रोक्ष्य सम्पूज्य

ॐ विष्णुः ३ अद्येहेत्यादि अमुकोऽहं रविवासरबताङ्गत्वेन कृतायाः श्रीभास्करपूजायाः साद्गुण्यार्थ साङ्गफलप्राप्तये श्रीभास्कर- देवप्रीतये इदं

## अथ रविवारव्रतप्रयोगः

वायनं ब्राह्मणाय दास्ये। ब्राह्मणं संपूज्य।दद्यात्

तण्डुलैः पूरितं पात्रं हिरण्येन समन्वितम् ।

रक्तवस्त्रयुगं चैव ब्राह्मणाय निवेदये ॥

**ततः प्रार्थना-**

**यस्योदये स्याज्जगतः प्रबोधो**

**यः कर्मसाक्षी भुवनस्य गोप्ता।**

**कुष्ठादिकव्याधिविनाशको यः**

**स भास्करो मे दुरितं निहन्यात् ।।**

**ॐ नमो०। आवाहनं न जानामि० मन्त्रहीनं०**

ॐ अच्युताय नमः ॐ विष्णवे नमः कायेन वाचा० इत्यादि कर्मेश्वरार्पणं कृत्वा ब्राह्मणं संभोज्य लवणदग्धोष्णोदकादिवर्ज्यवर्जितं हविष्यमेकवारं दिवैवाश्नीयात् ।

**इति रविवारव्रतपूजाप्रयोगः ।**